# अथ लक्ष्मीकान्तशिक्षा

रक्षा वैदिकवर्णानां शिक्षा दुर्मतिरक्षसाम्
लक्ष्मीं दद्याच्चतुःश्लोकी लक्ष्मीकान्तस्य भूतिवत्

अच्पूर्वं हलि हल् द्विरुक्तमपि च स्पर्शो लवोर्ध्वः स्वराद्
ऊर्ध्वाद् राद्धलि वाऽचि वा हलपि वाऽनुस्वारयुक्तादिमौ
द्वावन्योन्यसहायतोऽन्तगनङौ ह्रस्वात् परावच्परौ
द्वे द्वे स्तोऽपि च पूर्वमागममितस्तुर्यद्वितीयौ हलौ १

भूते धाम च पाथ एष परमात्यात्यग्रगाः पूर्वगाः
किं चोर्ध्वा उपसर्गतश्छखिभुजा लक्ष्यात् क्वचित्पूर्वगाः
तन्मध्ये प्रथमागमश्च सदृशः स्पर्शोऽप्यघोषोष्मणा-
मूर्ध्वेऽधः प्रथमो भजेत् सषशतोऽनन्तो द्वितीयं न वा २

नोष्मा तु प्रथमस्वरात् प्रथमतो नानुत्तमे हल् परे
वर्ग्येऽनुत्तम उत्तमे न न विसर्गो रो हशस्पर्शगः
लो वः स्पर्शपरश्च नश्च यवहात्पूर्वोऽन्तगो न द्विधा
मः पूर्वोऽप्यनुनासिकं च यवलस्पर्शात् सवर्णं भजेत् ३

ङोऽनन्तात् तधयोः क्रमेण परतः स्यातां कगावागमौ
ङात् कः स्याट्टनतस्तु तश्च सषयोः स्पर्शादनूष्मात्मनः
ऊर्ध्वस्थेष्वपि चोत्तमेषु च यमान् आहुस्तथाऽनुत्तमाद्
नासिक्यं नणमैर्युताद् यजुषि हाद् ञः स्याच्छपूर्वस्य नः
४

वर्णक्रमचतुःश्लोकीं वर्णक्रमविचक्षणाः
पाठतश्चार्थतो ज्ञात्वा विजयध्वं दिशो दश

Reference:
Aithal, K.Parameswara, *Veda-Lakṣaṇa: Vedic Ancillary Literature: A Descriptive Bibliography*, Motilal Banarsidass: Delhi, 1993, No. 1055.
Chakraborty, Deepro, "An Edition of the Lakṣmīkāntaśikṣā or the Varṇakramacatuśślokī," https://www.academia.edu/32068630